श्रीगणेशाय नमः ॥ ॥ श्रीगुरवे नमः ॥ हस्तौपादौप्रक्षाल्य ॥ आस
नारोहणम् ॥ ॐभूर्भुवःस्वःइत्याचमनम् ॥ ॐनमःशिवायेतित्रिवारं
पठेत् ॥ त्र्यम्बकमितिविभूतिधारणम् ॥ पीठेलिंगस्थापनम् ॥ गणप-
त्यादिमंडलेअक्षतपुंजस्थापनम् ॥ ततःस्वास्तिवाचनम् ॥ प्रतिज्ञासं
कल्पः ॥ गणपतिपूजनम्॥ ततोवरणसंकल्पः ॥ ततःनंदीवीरभद्रौस्वा
मिकार्तिकंकुबेरंकीर्तिमुखंचपूजयेत् ॥ ॐस्वस्तिनऽइन्द्रोवृद्धश्श्रवाः
स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्ति
नोबृहस्पतिर्दधातु ॥ १ ॥ पयःपृथिव्यांपयओषधीषुपयोदिव्य

न्तरिक्षेपयोधाः ॥ पयस्वतीःप्प्रदिशःसंतुमह्यम् ॥ २ ॥ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्द्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्त्वा ॥ ३ ॥ अग्निर्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवताविश्श्वेदेवा देवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता ॥ ४ ॥ द्यौःशांतिरन्तरिक्षꣳशांतिःपृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥ वनस्प्पतयःशान्तिर्विश्श्वेदेवाःशांतिर्ब्रह्मशान्तिःसर्वꣳशांतिःशांतिरेवशान्तिःसामाशान्तिरेधि ॥ ५ ॥ सुशान्तिर्भवतु ॥ ॐविश्श्वानिदेवसवितर्दुरि

तानिपरासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ६ ॥ इमारुद्रायतवसेकपर्दि
नेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पु
ष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥७॥ एतन्तेदेवसवितर्य्यज्ञम्प्राहुर्बृहस्पत-
येब्रह्मणे ॥ तेनयज्ञमवतेनयज्ञपतिन्तेनमामव ॥ ८ ॥ मनोजूतिर्जु
षतामाज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳ समिमन्द
धातु ॥ विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ ९ ॥ एषवैप्रति
ष्ठानामयज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवप्रतिष्ठितम्भवति ॥ १० ॥
गणानान्त्वा गणपतिꣳहवामहेप्रियाणान्त्वाप्रियपतिꣳ हवामहे

निधीनान्त्वांनिधिपतिर्ठंहवामहेव्वंसोमम ॥ आहमंजानिगर्भधमा
त्वमंजासिगर्भधम् ॥ ११ ॥ नमोगुणेभ्योगुणपतिभ्यश्श्ववो
नमो नमोव्व्रातेभ्योव्व्रातंपतिभ्यश्श्ववोनमोनमो गृत्सेभ्यो गृत्संप
तिभ्यश्श्ववोनमोनमोव्विरूपेभ्योव्विश्श्वरूपेभ्यश्श्ववोनमः ॥ १२ ॥
सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो
विघ्ननाशो विनायकः ॥ १३ ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजा
ननः ॥ द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ १४ ॥ विद्यारम्भे
विवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते

॥ १५ ॥ ॐभूर्भुवः स्वः अत्रमंडलेइहागच्छसुप्रातिष्ठोवरदोभवममपू
जांगृहाण श्रीगणाधिपतयेनमः ॥ अक्षतान्क्षिपेत् ॥ ॐतत्सदद्यब्रह्म
णोद्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पेवैवस्वतमन्वंतरे अष्टाविंशातितमे
युगेकलौप्रथमचरणे जम्बुद्वीपे भरतखंडे आर्यावर्तैकदेशे अमुकसंव
त्सरे अमुकऋतौ अमुकमासे अमुकपक्षे अमुकातिथौ अमुकवासरे य
थायोगकरणमुहूर्त्तें वर्तमाने अमुकगोत्रः अमुकशर्मा श्रुातिस्मृातिपुरा
णोक्तफलप्राप्तिकामः चतुर्वर्गफलप्राप्त्यर्थं प्रदोषादियामचतुष्टया
धिकरणकरुद्रीपाठसहितं चतुष्कृत्वो नार्म्मदाशिवालिंगपूजनमहंक

रिष्ये । तदंगत्वेनगणपत्यादिपूजनंचकरिष्ये॥ततो विश्वानिदेवसावि तरितिपंचप्रतिष्ठामंत्रान्पठेत् ॥ ॐगणानान्त्वेतिमंत्रेणावाहनपुष्पा सनपाद्यार्घाचमनीयस्नानीयपुनराचमनीयवस्त्रयज्ञोपवीतगंधाक्षतपु ष्पधूपदीपनैवेद्यतांबूलनमस्कारप्रदक्षिणाजपा इति षोडशोपचा रैर्गणपतिंपूजयेत् ॥ मूलमंत्रस्य जपः ॥ ततः प्रार्थना ॥ नमोगणे भ्यः॰ सुमुखश्चैकदंतश्चवक्रतुंडंपठेदितिगणपतिपूजनम् ॥ ततोवरण संकल्पः ॥ ॐतत्सदद्यब्रह्मणोद्वितीयपरार्द्धेश्रीश्वेतवाराहकल्पेवैव स्वतमन्वंतरे अष्टाविंशतितमेयुगेकलौप्रथमचरणेजंबूद्वीपे भारतखंडे

आर्य्यावर्त्ते अमुकसंवत्सरे अमुकऋतौ अमुकमासे अमुकपक्षे अमुक
तिथौ अमुकवासरे यथायोगकरणमुहूर्त्ते वर्तमाने अमुकगोत्रः अमुक
शर्मा श्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामः चतुर्वर्गफलप्राप्त्यर्थं कर्त्त
व्यप्रदोषादियामचतुष्टयाधिकरणकरुद्रीपाठसहितं चतुष्कृत्वो ना
र्मदशिवलिंगपूजनं ब्राह्मणद्वारा कारयितुमेभिर्वरणद्रव्यैर्यथानाम
गोत्रान्यथापरिमितब्राह्मणानहं वृणे ॥ व्रतेनदीक्षामाप्नोतिदीक्षया
प्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्श्रद्धयासत्यमाप्यते ॥
इतिब्राह्मणो वदेत् ॥ ततःनंदीश्वरपूजनमाह ॥ आयङ्गौः पृश्निरक्र

मुीदसंदन्मुातरंम्पुरः ॥ पितरंञ्चपुप्रयन्त्स्वं÷ ॥ षोडशोपचारैर्नंदीश्वरं पूजयेत् ॥ ततः प्रार्थना ॥ प्रैतुवुाजीकनिंक्रदुन्नानंदद्रासंभु÷पत्त्वा ॥ भरंन्नुग्निम्पुरीष्यंुम्मापुाद्यायुुषःपुरा ॥ इतिनंदीश्वरंपूजयेत् ॥ १ ॥

ततोवीरभद्रपूजनम् ॥ भुद्रङ्कर्णेभि÷शृणुयामदेवाभुद्रम्पंश्श्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसंस्तनूभिर्व्यशेमहिदेवहिंतुंयदायु÷ ॥ षोडशोपचारैर्वीरभद्रं पूजयेत् ॥ ततः प्रार्थना ॥ भुद्रोनोऽअुग्निराहुंतोभुद्रारातिः सुभगभुद्रोऽअध्वुर÷ ॥ भुद्राऽउुतप्प्रशंस्तय÷ ॥ इतिवीरभद्रं पूजयेत् ॥ ततः स्वामिकार्तिकपूजनमाह ॥ यदक्रंन्द÷प्प्रथुम

जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपुक्षाहरिणस्यबा
हूऽउपुस्तुत्यम्महिजातन्तेऽअर्वन् ॥ षोडशोपचारैःस्वामिकार्तिकंपू
जयेत् ॥ ततःप्रार्थना ॥ यत्रबाणाःसुम्पतन्तिकुमाराविशिखाऽइव॥
तन्नऽइन्द्रोबृहुस्पतिरदितिःशर्म्मयच्छतुविश्श्वाहाशर्म्मयच्छतु ॥ इ
तिस्वामिकार्तिकंप्रार्थयेत् ॥ ततःकुबेरपूजनमाह ॥ कुविदुङ्गयवमन्तो
यवंञ्चिद्यथादान्त्यनुपूर्वंवियूय ॥ इहेहैषाङ्कृणुहिभोजनानियेबुर्हि
षोनमऽउक्तिंयजन्ति ॥ षोडशोपचारैःकुबेरंपूजयेत् ॥ ततःप्रार्थना
॥ वुयठंसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्त ÷ सचेमहि ॥

इतिकुबेरंप्रार्थयेत् ॥ ततःकीर्तिमुखपूजनमाह ॥ असंवेस्वाहावसंवे
स्वहाविभुवेस्वाहाविवस्वते स्वाहांगणश्रियेस्वाहांगणपतये स्वा
हाभिभुवेस्वाहाधिपतयेस्वाहा शुषायस्वाहासꣳसर्प्पाय स्वाहाच
न्द्रायस्वाहाज्ज्योतिषेस्वाहा मलिम्म्लुचायस्वाहादिवापतयतेस्वाहा
॥ षोडशोपचारैःकीर्तिमुखंपूजयेत् ॥ ततःप्रार्थना ॥ ओजश्चमे
सहश्चमऽआत्माचमेतनूश्चमेशर्म्मचमेवर्म्मचमेङ्गानिचमेस्थीनिचमे पꣳ
रूꣳषिचमेशरीराणिचमऽआयुश्चमेजराचमेयज्ञेनकल्पन्ताम् ॥ इ
तिकीर्तिमुखंप्रार्थयेत् ॥ अथात्मविन्यासः॥ १ ॥ यातेरुद्रशिवातनूर

घोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशी
हि ॥ शिवायाम् ॥ १ ॥ अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥
तेषाᳬसहस्रयोजनेवधन्वानितन्मसि ॥ शिरसि ॥ २ ॥ असंख्या
तासहस्राणियेरुद्राऽअधिभूम्याम् ॥ तेषाᳬसहस्रयोजनेवधन्वा
नितन्मसि ॥ ललाटे ॥ ३ ॥ वयᳬसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥
प्रजावन्तᳬसचेमहि ॥ भ्रुवोर्मध्ये ॥ ४ ॥ त्र्यम्बकँयजामहेसुगन्धि
म्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥
नेत्रयोः ॥ ५ ॥ अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहासूर्योज्योति
२

ज्ज्योतिःसूर्य्यःस्वाहा ॥ अग्निर्वर्च्चोज्ज्योतिर्वर्च्चःस्वाहासूर्य्योवर्च्चो
ज्ज्योतिर्वर्च्चःस्वाहा ॥ ज्योतिःसूर्य्यःसूर्य्योज्ज्योतिःस्वाहा ॥ तृती
यनेत्रे ॥ ६ ॥ नमःस्रुत्त्यायचपथ्यायचनमःकाट्यायचनीप्प्याय
चनमःकुल्ल्यायचसरस्यायचनमोनादेयायचवैशन्तायच ॥ कर्णयोः
॥ ७ ॥ मानस्तोकेतनये मानऽआयुषिमानोगोषुमानोऽअश्श्वे
षुरीरिषः ॥ मानोवीरान्नुद्रभामिनोवधीर्हविष्मन्तःसदमित्त्वाहवा
महे ॥ नासिकयोः ॥ ८ ॥ अवतत्त्यधनुष्ट्वठंसहस्राक्षशतेषुधे ॥ नि
शीर्य्यशल्ल्यानांमुखाशिवोनःसुमनाभव ॥ मुखे ॥ ९ ॥ नमोवश्चते

परिवञ्चंतेस्तायूनाम्पतंयेनमोनमौनिषुङ्गिणंऽइषुधिमते तस्कंराणा
म्पतंयेनमोनमंःसृकायिभ्योजिघांᳬंसद्भ्योमुष्णताम्पतंये नमोन
मौसिमद्भ्योनक्तुञ्चरंद्भ्योविकृन्तानांपतंयेनमंः ॥ ग्रीवायाम्॥ १० ॥
नीलंग्ग्रीवाःशितिकण्ठादिवंᳬंरुद्राऽउपंश्रिताः ॥ तेषांᳬंसहस्रयो
जनेवधन्न्वांनितन्मासि ॥ कंठदेशे ॥ ११ ॥ नमंस्तुऽआयुंधायाना
तताययधृष्णवें ॥ उभाभ्यांमुततेनमोबाहुभ्यान्तवधन्न्वंने ॥ बाह्वोः
॥ १२ ॥ येतीर्त्थानिं प्प्रचरंन्ति सृकाहंस्तानिषुङ्गिणंः ॥ तेषां ᳬं
सहस्रयोजनेवधन्न्वांनितन्मासि ॥ हस्तयोः ॥ १३ ॥ नमोज्ज्येष्ठा

यंचकनिष्ठायचनमः पूर्वजायचापरजायचनमो मध्यमायं चापग
ल्भायचनमोजघन्यायचबुध्न्यायच ॥ अंगुलिषु ॥ १४ ॥ नमः
पुर्ण्यायच पर्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेच नमऽआखिद
तेचप्रखिदतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोवः किरिके
भ्योदेवानाठंहृदयेभ्यो नमोविचिन्वत्केभ्योनमोविक्षिणत्के
भ्योनमऽआनिर्हतेभ्यः ॥ हृदये ॥ १५ ॥ नमोगणेभ्योगणपतिभ्य
श्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमो नमो गृत्सेभ्यो
गृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्यो विश्वरूपेभ्यश्चवो नमः॥

पृष्ठे ॥ १६ विकिरिद्द्विलोहितनमस्तेऽअस्तु भगवः ॥ यास्ते
सहस्रंहेतयोऽन्यमुस्मान्निवपन्तुताः ॥ उदरे ॥ १७ ॥ नमःश
म्भवायच्चमयोभवायच्चनमःशंकरायच्च मयस्करायच्चनमःशिवा
यच्चशिवतरायच्च ॥ दक्षिणकुक्षौ ॥ १८ ॥ द्रापेऽअन्धसस्पतेदरिद्र
नीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनः
किञ्चनाममत् ॥ वामकुक्षौ ॥ १९ ॥ हिरण्यगर्भःसमवर्त्तताग्रेभूत
स्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवा
यहविषाविधेम ॥ नाभौ ॥ २० ॥ मीढुष्टमशिवतमाशिवोनःसुमना

भव ॥ पुरमेव्वृक्षऽआयुधन्निधायकृत्तिंव्वसानुऽआचरपिनाकम्बिब्भ्र
दागहि ॥ कटचाम् ॥ २१ ॥ शिवोनामासिस्वधितिस्तेपितानमस्तेऽ
अस्तुमामाहिठंसीः ॥ निवर्त्तयाम्म्यायुषेन्नाद्यायप्प्रजननायराय
स्प्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ॥ लिंगे ॥ २२ ॥ इमारुद्रायत
वसेकपर्द्दिनेक्षयद्वीरायप्प्रभरामहेमतीः ॥ यथाशमसद्द्विपेदेचतुष्प्प
देविश्श्वम्पुष्ट्टंग्रामेऽअस्मिन्ननातुरम् ॥ गह्ये ॥ २३ ॥ इषेत्त्वोर्ज्जेत्वा
वायवस्थदेवोवःसविता प्प्रार्प्पयतुश्श्रेष्ठतमाय कर्म्मणऽआप्प्या
यद्ध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मावस्तेनऽ

ईशतुम्नाघशंऽसुोध्रुवाऽअस्मिमन्नगोपंतौ स्यातबुह्वीर्ध्वजंमानस्य

पुशून्पाहि ॥ वृषणयोः ॥ २४ ॥ मानोमुहान्तंमुतमानोऽअर्भुक

म्मानुऽउक्षन्तमुतमानंऽउाक्षितम् ॥ मानोंव्वधीःपितरम्मोतमातरं

म्मानःप्प्रियास्तुन्वोरुद्ररीरिषः ॥ ऊर्वोः ॥ २५ ॥ एषतेरुद्रभागःसु

हस्वस्राम्बिकयुातजुंषस्वस्वाहुषतेरुद्रभागऽआखुस्तेपुशुः ॥ जा

न्वोः ॥ २६ ॥ नमोज्ज्येष्ठायंचकनिष्ठायंचुनमंःपूर्व्वुजायंचापरुजा

यंचुनमोमद्ध्युमायंचापगुल्भायंचुनमोजघुन्न्यायचबुुद्ध्न्यायच ॥

जंघयोः ॥ २७ ॥ नमोंह्रुस्वायंचवामनायंचुनमोंव्वृद्धायंचसुवृधेंचुन

मोग्ग्यायचप्रथमायंच ॥ गुल्फयोः ॥ २८ ॥ येपुथाम्पथिरक्षयऽ
ऐलबृदाऽआयुर्युधंः ॥ तेषांᳫसहस्रयोजुनेवुधन्वानितन्मसि ॥
पादयोः ॥ २९ ॥ अद्धचवोचदधिवुक्ताप्प्रथमोदैव्योभिषक् ॥ अहीं
श्चसर्वाञ्जम्भयुन्त्सर्वांश्चयातुधान्न्योधराचीःपरासुव ॥ कवचम् ॥
॥ ३० ॥ नमो बिल्मिनेचकवुचिनेचुनमोवुर्म्मिणेचव्वरूथिनेचुन
मःश्रुतायचश्श्रुतसेनायचुनमोदुन्दुभ्भ्यायचाहनुन्न्यायच ॥ अस्त्रम्
॥ ३१ ॥ व्विज्ज्युन्धनःकपुर्दिनोव्विशल्ल्योबाणवाँऽउत ॥ अनें
शन्नस्युषाऽइषवऽआभरस्यनिषङ्गधिः ॥ धनुः ॥ ३२ ॥ यत्रबाणाः

सुम्पतन्तिकुमाराविंशिखाऽइव ॥ तन्नुऽइन्द्रोबृहस्पतिरदितिःशर्म्म
यच्छतुविश्वाहाशर्म्मयच्छतु ॥ बाणः ॥ ३३ ॥ विकिरिद्रविलो
हितनमस्तेऽअस्तुभगवः ॥ यास्तेसहस्रंहेतयोन्यमस्मान्निवपन्तु
ताः ॥ खड्गः ॥ ३४ ॥ यऽएतावन्तश्चभूयांसश्चदिशोरुद्रावितस्थिरे ॥ तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ दिग्बन्धनम् ॥
॥ ३५ ॥ एवंन्यासविधिंकृत्वाशिवोहमितिभावयेत् ॥ एवंशिवलिंगेऽ
पिन्यासविधिंकुर्यात् ॥ मानोमहान्तमुतमानोऽअर्भकम्मानऽउक्ष
न्तमुतमानऽउक्षितम् ॥ मानोवधीःपितरम्मोतमातरम्मानःप्रिया

स्तुन्न्वोरुद्ररीरिषः ॥ आवाहनम्॥ १ ॥ यातेरुद्राशिवातुनूरघोरापाप
काशिनी ॥ तयांनस्तुन्न्वाशन्तमयागिरिंशन्ताभिचाकशीहि ॥ पु
ष्पासनम्॥ २॥ यामिषुङ्गिरिशन्तुहस्तेबिभुर्ष्यस्तवे ॥ शिवाङ्गिरित्र
तांकुरुमाहिर्ठसीःपुरुषञ्जगंत् ॥ पाद्यम् ॥ ३ ॥ शिवेनुब्वचंसात्वागि
रिशाच्छावदामासि ॥ यथानुःसर्व्वमिज्जगंदयुक्ष्मर्ठसुमनाऽअसंत् ॥
॥ अर्घ्यः ॥ ४ ॥ अध्ध्यंवोचदधिवुक्ताप्प्रथमोदैव्योभिषक् ॥अहींश्च
सर्वांञ्जम्भयन्तसर्व्वांश्चयातुधान्योधराचीःपरासुव । आचमनम् ॥
॥ ५ असौयस्ताम्म्रोऽअरुणऽउतबुभ्रुःसुमङ्गलंः ॥ येचैनर्ठरुद्राऽ

अभितोदिक्षुश्रिताः सहस्रशोवैषाꣳहेडऽईमहे ॥ स्नानम् ॥ ६ ॥ अ
थपंचामृतस्नानम् ॥ आप्प्यायस्वेतिगौतमऋषिः सोमोदेवतागाय
त्रीछन्दःक्षीरस्नानेविनियोगः ॥ आप्प्यायस्वसमेतुतेविश्श्वतः सो
मवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ७ पयः पृथिव्याम्पयऽओष
धीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्प्रदिशः सन्तुमह्यम् ॥
पयःस्नानम् ॥ ८ ॥ असौयस्ताम्म्रोऽअरुणऽउतबभ्भ्रुः सुमङ्गलः ॥
येचैनꣳरुद्राऽअभितोदिक्षुश्श्रिताःसहस्रशोवैषाꣳहेडईमहे ॥ ९ ॥ दे
वस्यत्त्वासवितुःप्प्रसवेश्श्विनोर्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ शुद्ध

स्नानम् ॥ १० ॥ दधिक्राव्णोइत्यस्यदधिक्राव्णऋषिः सुरभिर्देव
ताऽनुष्टुप्छन्दोदधिस्नानेविनियोगः ॥ दधिक्राव्णोऽकारिषञ्जि
ष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूᳬषितारिषत्
॥ दधिस्नानम् ॥ ११ ॥ असौयः० ॥ १२ ॥ देवस्यत्वा० ॥ शुद्धस्नानम्
॥ १३ ॥ शुक्रमसीत्यस्ययजुषःप्रजापतिर्ऋषिराज्यंदेवताऽनुष्टुप्छं
दःआज्यस्नानेविनियोगः ॥ शुक्रमसिज्ज्योतिरसितेजोसि ॥ घृतव
तीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवी
वरुणस्यधर्म्मणाविष्कंभिते ऽअजरेभूरिरेतसा ॥ १४ ॥ घृतंघृतपा

वान्नᳬपिबतुव्वसाँव्वसापावानᳬपिबतान्तरिक्षस्यहुविरसिस्वाहा ॥ दिशꣿ
प्प्रदिशऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यᳬ स्वाहा ॥ घृतस्नानम् ॥
॥ १५ ॥ असौषः० ॥ १६ ॥ देवस्यत्त्वा० ॥ शुद्धस्नानम् ॥ १७ ॥ मधु
व्वाताऽइतिमंत्रस्यगौतमऋषिर्मधुदेवतागायत्रीछंदोमधुस्नाने विनि
योगः ॥ मधुव्वाताऽऋतायतेमधुक्षरान्तिसिन्धवᳬ ॥ माद्ध्वीर्न्नᳬसुन्त्वोष
धीᳬ ॥ १८ ॥ मधुनक्क्तमुतोषसोमधुमत्त्पार्थिवᳬरजꣿ ॥ मधुद्यौर
स्तुनᳬपिता ॥ १९ ॥ मधुमान्नोव्वनस्प्पतिर्म्मधुमाँऽअस्तुसूर्य्यꣿ ॥
माद्ध्वीर्ग्गावोभवन्तुनᳬ ॥ मधुस्नानम् ॥ २० ॥ असौषः ० ॥ २१ ॥

देवस्यंत्त्वा ० ॥ शुद्धस्नानम् ॥२२॥ स्वादुःपवस्वेतिमंत्रस्यवेणुर्ऋषिः
सोमात्त्मिकाशर्करादेवता जगतीछंदःशर्करास्नानेविनियोगः ॥ स्वा
दुःपवस्वदिव्व्यायजन्मनेस्वादुरिन्द्रायसुहवींतुनाम्म्ने ॥ स्वादुर्म्मित्रा
युवरुणायव्वायवे बृहस्प्पतयेमधुमा२॥ऽअदाब्भ्यः ॥ २३ ॥ अपा२ंर
समुद्वयसर्ठसूर्य्यसन्तर्ठसमाहितम् ॥ अपार्ठरसस्यचोरसस्तंव्वोगृ
ह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टं गृह्णाम्म्येषते योनिरिंद्रा
यत्वाजुष्टतमम्॥शर्करास्नानम्॥२४॥असौषः० ॥२५॥ देवस्यंत्त्वा०
शुद्धस्नानम् ॥ २६ ॥ अद्ध्यवोचदधिवक्क्ताप्प्रथमोदैव्व्योभिषक् ॥

अहींश्चसर्वाञ्जम्भयन्त्सर्व्वाश्चयातुधान्योधराचीःपरासुव ॥ पुनरा
चमनीयम् ॥ २७ ॥ असौयोवसर्प्पतिनीलग्रीवोविलोहितः ॥ उतैनं
गोपाऽअदृशन्नदृशन्नुदहार्य्यः सदृष्टोमृडयातिनः ॥ वस्त्रम् ॥ २८ ॥
परिधास्यैयशोधास्यैदीर्ग्घायुत्वायजरदष्टिरस्मि शतञ्च जीवामिशर
दः पुरूचीरायस्प्पोषमभिसंव्ययिष्ष्ये ॥ वस्त्रेणकटिबन्धनम् ॥२९ ॥
नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्त्वानो
हन्तेभ्योकरन्नमः ॥ यज्ञोपवीतमितिमंत्रस्यपरमेष्ठीऋषिस्त्रिष्टुप्छं
दोलिंगोक्तादेवतायज्ञोपवीतपरिधानेविनियोगः ॥ यज्ञोपवीतंपरमं

पवित्रंप्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञो
पवीतंबलमस्तुतेजः ॥ यज्ञोपवीतम् ॥ ३० ॥ प्रमुंञ्चधन्वनस्त्वमुभ
योरात्न्योंर्ज्ज्याम् ॥ याश्चतेहस्तऽइषवःपराताभगवोवप ॥ ३१ ॥
गन्धोहैवास्यसुगान्धितेजनन्तद्यत्सुगान्धितेजनम्भवति गन्धेनैवैन
मेतत्समर्द्धयति ॥ गंधः॥३२॥ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत॥
अस्तोषतस्वभानवोविप्रानाविष्ठयामतीयोजान्विन्द्रतेहरी ॥ अक्ष
ताः ॥ ३३ ॥ विज्ज्यन्धनुःकपर्दिनोविशल्योबाणवाँऽउत ॥
अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥ ३४ ॥ याःफलिनीर्य्या

ऽअंफलाऽअंपुष्प्पायाश्श्चंपुष्प्पणीः ॥ बृहस्प्पतिंप्प्रसूतास्तानोंमु
ञ्चन्त्वᳪंहसः ॥ पुष्पाणि ॥ ३५ ॥ नमोंबिल्म्मिनेंचकवचिनेंचन
मोंव्वर्म्मिणे चव्वरूथिनेंचनमः श्श्रुतायचश्श्रुतसेनायंच नमो दुन्दु
भ्यायचाहनन्यायच ॥ ३६ ॥ अमृतोद्भवंश्रीवृक्षंशङ्करस्यसदाप्रिय।
तत्तेशम्भोप्रयच्छामिबिल्वपत्रंसुरेश्वर ॥ त्रिशाखैर्बिल्वपत्रैश्चअच्छि
द्रैः कोमलैः शुभैः ॥ तवपूजांकरिष्यामिअर्च्चयेपरमेश्वर ॥ गृहाणबि
ल्वपत्राणिसपुष्पाणिमहेश्वर ॥ सुगन्धीनिभवानीशशिवत्वंकुसुम
प्रिय ॥ बिल्वपत्राणि ॥ ३७ ॥यातेहेतिम्मींढुष्टमहस्तेंबभूवतेधनुः॥

तयास्म्मान्विश्श्वतुस्त्वमयक्ष्मयापरिभुज ॥ ३८ ॥ धूरसिधूर्व्वधू
र्वन्तन्धूर्व्वतंय्योस्म्मान्धूर्व्वतितन्धूर्व्वयंव्वयन्धूर्व्वामः ॥ देवानामसिव
ह्नितमर्ठसस्निन्नतमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ धूपः॥ ३९॥ परि
तेधन्न्वनोहेतिरस्म्मान्वृणक्तुविश्श्वतः ॥ अथोयऽइषुधिस्तवारेऽअ
स्म्मान्निधेहितम् ॥ ४० ॥ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निःस्वाहासूर्य्यो
ज्ज्योतिर्ज्ज्योतिः सूर्य्यःस्वाहा ॥ अग्निर्व्वर्च्चोज्ज्योतिर्व्वर्च्चःस्वाहा ॥
सूर्य्योवर्च्चोज्ज्योतिर्व्वर्च्चःस्वाहा ॥ ज्ज्योतिःसूर्य्यःसूर्य्योज्ज्योतिः
स्वाहा ॥ दीपः ॥ ४१ ॥ अवतत्त्यधनुष्ट्वर्ठसहस्राक्षशतेषुधे ॥ निशी

ठ्ठैशुल्यानांमुखांशिवोनंःसुमनाभव ॥ ४२ ॥ अन्नंपुतेन्नंस्यनोदेह्य
नमीवस्यंशुष्मिणंः ॥ प्रप्प्रंदातारन्तारिषऽउर्ज्जंन्नोधेहि द्विपदेचतुष्प
दे ॥ नैवेद्यम् ॥ ४३ ॥ अद्धुच्यंवोचदधिवुक्ताप्प्रंथमोदैव्योभिषक् ॥
अहीँश्चुसर्वाञ्जम्भयुन्त्सर्व्वांश्चयातुधान्न्योधुराचीःपरांसुव ॥ आच
मनम् ॥ ४४ ॥ नमंस्तुऽआयुधायानांततायधृष्णवे ॥ उुभाब्भ्यांमु
ततेनमोबाहुब्भ्यान्तवुधन्वने ॥ मुखवासः ॥ ४५ ॥ नमःपुर्णायंचप
र्णशुदायंचुनमंऽउद्गुरमाणायचाभिग्घ्रुतेच नमंऽआखिदतेचं प्प्राखिद
तेचुनमंऽइषुकृद्ध्योधनुष्कृद्ध्यंश्चवोनमोनमोंवःकिरिकेब्भ्योदुवानाठं

हृदयेभ्योनमोविचिन्वत्केभ्योनमऽआनिर्हतेभ्यः ॥ तांबूलम्
॥ ४६ ॥ हिरण्यगर्भःसमवर्त्ततागेभूतस्यजातःपतिरेकऽआसीत् ॥
सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ दक्षिणा
॥ ४७ ॥ अथध्यानम् ॥ शुद्धस्फटिकसंकाशंत्रिनेत्रंपंचवक्त्रकम् ॥ गं
गाधरंदशभुजंसर्वाभरणभूषितम् ॥ ४८ ॥ नीलग्रीवंशशांकांकंनाग
यज्ञोपवीतिनम्॥ व्याघ्रचर्म्मोत्तरीयंचवरेण्यमभयप्रदम् ॥ ४९ ॥ क
मंडलक्षसूत्राभ्यामन्वितंशूलपाणिनम् ॥ ज्वलंतं पिङ्गलजटाशि
खामुद्योतकारिणम्॥ ५० ॥अमृतेनाप्लुतंहृष्टमुमादेहार्द्धधारिणम् ॥

दिव्यसिंहासनासीनंदिव्यभोगसमन्वितम् ॥ ५१ ॥ दिग्देवतासमा
युक्तंसुरासुरनमस्कृतम् ॥ नित्यंचशाश्वतंशुद्धंध्रुवमक्षरमव्ययम् ॥
सर्वव्यापिनमीशानमेवंवैविश्वरूपिणम् ॥ गौरींचतुर्भुजां चंडींत्रिने
त्रांमुकुटोज्ज्वलाम् ॥ पद्मदर्पणहस्तांचवरदाभयहस्तकाम्॥ दिव्यव
स्त्रपरीधानांदिव्यालंकारभूषिताम् ॥ प्रसन्नवदनांध्यायेच्छिवोत्संगे
तुवामतः ॥ एवंध्यात्वाद्विजः सम्यक्ततोयजनमारभेत् ॥ ५२ ॥ पु
ष्पोदकेनतर्प्पयेत् ॥ ॐ भवंदेवंतर्प्पयामि ॥ १ ॥ ॐ शर्वंदेवंतर्प्पयामि
॥ २ ॥ ॐ ईशानंदेवंतर्प्पयामि ॥ ३॥ ॐ पशुपतिंदेवंतर्प्पयामि ॥४॥

ॐरुद्रंदेवंतर्प्पयामि ॥ ५ ॥ ॐ उग्रंदेवंतर्प्पयामि ॥ ६॥ ॐ भीमंदेवंत
र्प्पयामि ॥ ७॥ ॐ महांतंदेवंतर्प्पयामि ॥ ८ ॥ ॐ देवदेवंतर्प्पयामि
॥ ९ ॥ ॐ ज्येष्ठायनमः ॥ पुनराचमनीयम् ॥ १ ॥ ॐश्रेष्ठायनमः॥ म
धुपर्कः ॥ २ ॥ मधुपर्कंगृहाणेशसर्वदामधुपर्कपः ॥ मधुपर्कप्रदानेन
प्रीतोभवमहेश्वर ॥ २ ॥ ॐकालायनमः ॥ गंधः ॥ ३ ॥ ॐकलविक
रणायनमः । पुष्पाणि॥४॥ॐसर्वभूतदमनायनमः ॥ धूपः ॥५॥ॐम
नोन्मनायनमः ॥दीपः ॥ ६ ॥ॐभवोद्भवायनमः ॥नैवेद्यम्॥७ ॥अ
थाष्टौपुष्पाञ्जलयः ॥ ॐभवायदेवायनमः ॥ १ ॥ ॐशर्वायदेवाय

नमः॥ २ ॥ ॐईशानायदेवायनमः ॥ ३ ॥ ॐपशुपतयेदेवायनमः ॥ ४ ॥ॐरुद्रायदेवायनमः ॥ ५ ॥ ॐउग्रायदेवायनमः ॥ ६ ॥ॐभीमायदेवायनमः ॥ ७ ॥ ॐमहतेदेवायनमः ॥ ८ ॥ॐ भवस्यदेवस्यपत्न्यैनमः ॥ १ ॥ॐशर्वस्यदेवस्यपत्न्यैनमः ॥ २ ॥ ॐईशानस्यदेवस्यपत्न्यैनमः ॥ ३ ॥ ॐपशुपतेर्देवस्यपत्न्यैनमः ॥ ४ ॥ ॐरुद्रस्यदेवस्यपत्न्यैनमः ॥ ५ ॥ ॐउग्रस्यदेवस्यपत्न्यैनमः ॥ ६ ॥ ॐभीमस्यदेवस्यपत्न्यैनमः ॥ ७॥ ॐमहतोदेवस्यपत्न्यैनमः ॥ ८ ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेस्तुरु

द्ररूपेभ्यः ॥ १ ॥ॐतत्पुरुषायविद्महेमहादेवायधीमाहि ॥ तन्नोरुद्रः प्रचोदयात् ॥ २ ॥ ॐशर्वायक्षितिमूर्त्तयेनमः ॥ १ ॥ ॐभवायजलमूर्त्तयेनमः॥ २ ॥ ॐरुद्रायाग्निमूर्त्तयेनमः ॥ ३ ॥ ॐ उग्रायवायुमूर्त्तयेनमः ॥ ४ ॥ ॐ भीमायाकाशमूर्त्तयेनमः ॥ ५ ॥ ॐ पशुपतयेयजमानमूर्त्तयेनमः ॥ ६ ॥ ॐ महादेवायसोममूर्त्तयेनमः ॥ ७ ॥ ॐ ईशानायसूर्य्यमूर्त्तयेनमः ॥ ८ ॥ एवंसंपूज्य ततः सहस्रघटैः स्नपनम् ॥ ॐ नमः शिवायेतिजपम् ॥ ॐ अस्य श्रीषडक्षरशिवमंत्रस्य वामदेवऋषिः पंक्तिश्छंदः सदाशिवोदेवता पुरुषार्थचतुष्टयसिद्धय

थैंजपेविनियोगः ॥ वामदेवायऋषयेनमः शिरसि ॥ १ ॥ पंक्तिच्छंदसे
नमोमुखे ॥ २ ॥ सदाशिवायदेवतायैनमः हृदये ॥ ३ ॥ चतुर्विधपुरु
षार्थसिद्ध्यर्थैंजपेविनियोगःइतिकृतांजलिर्वदेत् ॥ ॐहृदयायन
मः ॥ १ ॥ न शिरसेस्वाहा ॥ २ ॥ मः शिखायैवषट् ॥ ३ ॥ शि कव
चायहुम् ॥ ४ ॥ वा नेत्रत्रयायवौषट् ॥ ५ ॥ य अस्त्रायफट् ६ ॥ स्तो
त्रंपठेत् ॥ ओंकारंबिंदुसंयुक्तंनित्यंध्यायंतियोगिनः ॥ कामदंमोक्षदं
चैवओंकारायनमोनमः ॥ १ ॥ नजातिर्नमृतिर्यस्यक्षयोयस्यनावि
द्यते ॥ नमंतिदेवतास्सर्वानकारंतंनमाम्यहम् ॥ २ ॥ महादेवंमहावक्त्रं
महाध्यानपरायणम् ॥ महापापहरंदेवंमकारंतंनमाम्यहम् ॥ ३ ॥ शि

वात्परतरोनास्तिशिवशास्त्रेषुनिश्चयः ॥ शमंतिसर्वपापानिशकारंतं
नमाम्यहम् ॥ ४ ॥ वाहनंवृषभोयस्यवासुकिःकंठभूषणम् ॥ वामेश
क्तिधरंदेवंवकारंतंनमाम्यहम् ॥ ५ ॥ यत्रयत्रस्थितोदेवःसर्वव्यापी
महेश्वरः॥योगुरुःसर्वदेवानांयकारंतंनमाम्यहम् ॥ ६ ॥ इदंषडक्षर
स्तोत्रंप्रातरुत्थाययःपठेत् ॥ मुच्यतेसर्वपापेभ्यः शिवलोकंसगच्छ
ति॥७॥ इतिषडक्षरस्तोत्रम् ॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजा
तःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहवि
षाविधेम ॥ १ ॥ आरात्रिपार्थिवठंरजःपितुरप्रायिधामभिः ॥ दिवःस

दार्त्थंसिबृहतीद्विर्तिष्ठसऽआत्त्वेषद्वर्त्ततेतम्मः ॥ २ ॥ यज्ञेनयज्ञमयज
न्तदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्र
पूर्वेसाध्याःसंतिदेवाः ॥ १ ॥ ॐराजाधिराजायप्रसह्यसाहिने ॥ नमो
वयंवैश्रवणायकुर्महे ॥ १ ॥ समेकामान्कामकामायमह्यम् का
मेश्वरोवैश्रवणो ददातु ॥ २ ॥ कुबेरायवैश्रवणाय महाराजायनमः ॥
ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं
राज्यं माहाराज्यमाधिपत्यमयं समंतपर्यायी स्यात् सार्वभौमः
सार्वायुष (ष) आंतादापरार्धात् पृथिव्यै समुद्रपर्यंताया एकराडिति॥
तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे ॥

आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ ॥ ॥ ॥
ॐअग्निर्देवतावातोदेवतासूर्योदेवताचंद्रमादेवता वसवोदेवतारुद्रोदे
वतादित्यादेवतामरुतोदेवताविश्वेदेवादेवताबृहस्पतिर्देवतेंद्रो देवता
वरुणोदेवता ॥ १ ॥ मानोमहान्तमुतमानोऽअर्भकम्मानऽउक्षन्त
मुतमानऽउक्षितम् ॥ मानोवधीःपितरम्मोतमातरम्मानःप्प्रियास्त
न्वोरुद्ररीरिषः ॥ १ ॥ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमा
नोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःसद
मित्वाहवामहे ॥ ॥ इतिवेदोक्तशिवार्चनम् ॥ ॥ ॥ ॥

॥ श्रीगणेशायनमः ॥ ॥ ॐ नमोमृत्युञ्जयाय ॥ नंदिकेश्वरउवाच ॥ कैलासस्योत्तरे शृङ्गे शुद्धस्फ
टिकसन्निभे ॥ तमोगुणविहीनेतुजरामृत्युविवार्जिते ॥ १ ॥ सर्वतीर्थास्पदाधारेसर्व्वज्ञानकृतालये॥कृतांज
लिपुटोब्रह्माध्यानशीलःसदाशिवम् ॥ २॥पप्रच्छप्रणतोभूत्वाजानुभ्यामवनिंगतः॥सर्वार्थसम्यगाधारंब्र
ह्मालोकपितामहः ॥ ३ ॥ब्रह्मोवाच ॥ ॥ केनोपायनदेवेशःचिरायुर्लोमशोऽभवत् ॥ तन्मेब्रूहिमहेशान
लोकानांहितकाम्यया ॥ ४ ॥ श्रीसदाशिवउवाच ॥ शृणुब्रह्मन्प्रवक्ष्यामिचिरायुर्मुनिसतमः ॥ सं
जातःकर्म्मणायेनव्याधिमृत्युविवार्जितः ॥५॥ तस्मिन्नेकार्णवेघोरेसलिलौघपरिप्लुते ॥कृतान्तभयनाशा
यस्तुतोमृत्युंजयःशिवः ॥६॥तस्यसंकीर्तनान्नित्यंमुनिर्मृत्युविवर्जितः ॥ तमेवकीर्तयब्रह्मन्मृत्युंजेतुंनसं
शयः ॥ लोमशउवाच ॥ ॐ देवाधिदेवदेवेशसर्वप्राणभृतांवर ॥ प्राणिनामपिनाथस्त्वंमृत्युंज
यनमोऽस्तुते ॥८॥देहिनांजीवभूतोऽसिजीवोजीवस्यकारणम् ॥जगतांरक्षकस्त्वंवैमृत्युंजयनमोऽस्तुते९
हिमाद्रिशिखराकारसुधावीचिमनोहर॥ पुण्डरीक परंज्योतिर्मृत्युंजयनमोऽस्तुते १० ध्यानाधारमहाज्ञा
नसर्वज्ञानैककारण॥परित्रातासिलोकानांमृत्युंजयनमोऽस्तुते ११॥ निहतायेनकालेनसदेवासुरमानुषाः॥

गन्धर्वाप्सरसश्चैवसिद्धविद्याधरास्तथा ॥ १२ ॥ साध्याश्चवसवोरुद्रास्तथाश्विनिसुतावुभौ॥मरुतश्चदि
शोनागाःस्थावराजङ्गमास्तथा॥१३॥जितः सोऽपित्वयाध्यानान्मृत्युंजयनमोऽस्तुते॥१४॥येध्यायंति
परांमूर्तिंपूजयंत्यमराधिप ॥ नतेमृत्युवशंयांतिमृत्युंजयनमोऽस्तुते॥१५॥ त्वमोंकारोऽसिवेदानांदेवानां
चसदाशिवः ॥आधारशक्तिःशक्तीनांमृत्युंजयनमोऽस्तुते॥१६॥स्थावरेजंगमेवापियावत्तिष्ठतिमेदिनी॥
जीवत्वित्याहलोकोऽयंमृत्युंजयनमोऽस्तुते१७सोमसूर्याग्निमध्यस्थव्योमव्यापिन्सदाशिव॥कालत्रयम
हाकालमृत्युंजयनमोऽस्तुते१८प्रबुद्धेचाप्रबुद्धेचत्वमेवसृजसेजगत्॥सृष्टिरूपेणदेवेशमृत्युंजयनमोऽस्तुते
॥ १९ ॥व्योम्नित्वंव्योमरूपोऽसितेजःसर्वत्रतेजसि॥प्राणिनांज्ञानरूपोऽसिमृत्युंजयनमोऽस्तुते॥२०॥ज
गज्जीवोजगत्प्राणःस्रष्टात्वंजगतःप्रभुः॥कारणंसर्वतीर्थानांमृत्युंजयनमोऽस्तुते॥२१॥नेतात्वमिंद्रियाणां
चसर्वज्ञानप्रबोधकः ॥ सांख्ययोगश्चहंसश्चमृत्युंजयनमोऽस्तुते ॥ २२ ॥ रूपातीतःसुरूपश्चपिंडस्थपदमे
वच॥चतुर्युगकलाधारमृत्युंजयनमोऽस्तुते॥२३॥रेचकेवह्निरूपोऽसिसोमरूपोऽसिपूरके ॥ कुम्भकेशिव
रूपोऽसिमृत्युंजयनमोऽस्तुते॥२४॥क्षयंकरोपिपापानांपुण्यानामपिवर्धनम्॥ हेतुस्त्वंश्रेयसान्नित्यंमृत्युं

जयनमोऽस्तुते॥२५॥सर्वमायाकलातीतसर्वेंद्रियपरावर॥सर्वेंद्रियकलाधीशमृत्युंजयनमोऽस्तुते २६॥
रूपंगंधोरसःस्पर्शःशब्दसंस्कारएवच॥ त्वत्तःप्रकाशएतेषांमृत्युंजयनमोऽस्तुते ॥२७॥ चतुर्विधानांसृष्टी
नांहेतुस्त्वंकारणेश्वरः ॥भावाभावपरिच्छिन्नमृत्युंजयनमोऽस्तुते॥२८॥त्वमेकोनिष्कलोलोकेसकलंभुव
नत्रयम्॥ अतिसूक्ष्मातिरूपस्त्वंमृत्युंजयनमोऽस्तुते ॥२९॥ त्वंप्रबोधस्त्वमाधारस्त्वद्बीजंभुवनत्रयम्॥
सत्वंरजस्तमस्त्वंहिमृत्युंजयनमोऽस्तुते॥३०॥त्वंसोमस्त्वंदिनेशश्चत्वमात्माप्रकृतेःपरः॥ अष्टत्रिंशत्क
लानाथमृत्युंजयनमोऽस्तुते ॥३१॥सर्वेंद्रियाणामाधारःसर्वभूतगुणाशयः ॥सर्वज्ञानमयानंतमृत्युंजयन
मोऽस्तुते॥३२॥त्वमात्मासर्वभूतानांगुणानांत्वमधीश्वरः॥सर्वानन्दमयाधारमृत्युंजयनमोऽस्तुते ३३॥
त्वंयज्ञःसर्वयज्ञानांत्वंबुद्धिर्बोधलक्षणा॥शब्दब्रह्मत्वमोङ्कारोमृत्युंजयनमोऽस्तुते ॥ ३४ ॥ श्रीसदाशिव
उवाच ॥ ॥ एवंसङ्कीर्तयेद्यस्तुशुचिस्तद्गतमानसः ॥भक्त्याशृणोतियोब्रह्मन्नसमृत्युवशोभवेत्॥ ३५ ॥
नतुमृत्युभयंतस्यप्राप्तकालंचलंघयेत् ॥अपमृत्युभयंतस्यप्रणश्यतिनसंशयः॥ ३६ ॥व्याधयोनोपपद्य
न्तेनोपसर्गभयंभवेत्॥प्रत्यासन्नान्तरेकालेशतैकावर्त्तनेकृते ॥३७॥ मृत्युर्नजायतेतस्यरोगान्मुंचतिनि

श्रितम्॥पंचम्यांवादशम्यांवापौर्णमास्यामथापिवा ॥ ३८ ॥ शतमावर्त्तयेद्यस्तुशतवर्षंसजीवति ॥तेज
स्वीबलसम्पन्नोलभतेश्रियमुत्तमाम्॥ ३९ ॥त्रिविधंनाशयेत्पापंमनोवाक्कायसम्भवम्॥अभिचाराणिक
र्माणिकर्माण्याथर्वणानिच ॥क्षीयन्तेनात्रसंदेहोदुःस्वप्नंचविनश्यति ॥ ४० ॥ इदंरहस्यंपरमंदेवदेवस्यशू
लिनः॥दुःस्वप्ननाशनंपुण्यंसर्वविघ्नविनाशनम् ॥ ४१॥इतिश्रीशिवब्रह्मसंवादे श्रीमृत्युंजयस्तोत्रंसंपूर्णम्

॥ श्रीसदाशिवार्पणमस्तु ॥

इदं पुस्तकं मुम्बय्यां क्षेमराज-श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेंकटेश्वर"
स्टीम्-यन्त्रागारे मुद्रितम् । संवत् १९८३, शके १८४८.

# कर्मकाण्डप्रयोगादि-ग्रन्थाः ।

| नाम | की रु आ |
| --- | --- |
| अष्टशान्ति-इसमें-१ सूर्यादिग्रह, २ सप्तग्रहीयोग, ३ मघारेवत्यादि, ४ ज्वरादिरोगोत्पत्ति, ५ सर्वनक्षत्र, ६ ग्रहण, काकमथुनदर्शन और ८ पल्लीसरठपतन ये आठ शान्ति हैं ... | ०-२ |
| अष्टलिङ्गतोभद्ररंगीन ... ... | ०-२ |
| अथर्ववेद-कौशिक सूत्रानुसारीआह्निकगुजराती भाषाटीका समेत ... | १-८ |
| अन्त्येष्टीश्राद्धकर्मपद्धति ० पं-चतुर्थीलालजीकृत नूतन छपकर तैयारहै ... | १-४ |
| आह्निकसूत्रावली-यजुर्वेदी-प्रातः स्मरणसेलेकर शयनपर्यंतके सब कर्मप्रयोगएकत्र कियेगयेहैं ... .... | २-८ |
| आश्लेषाशान्ति और ज्येष्ठाशान्ति-इसमें-आश्लेषा और ज्येष्ठानक्षत्रमें शान्तिका प्रयोग ... ... | ०-२ |

जाहि ॥२३॥

| नाम. | की. रु. आ. |
|---|---|
| उपाकर्मपद्धति–अर्थात् ( श्रावणशुक्ल १५ की) शुक्लयजुर्वेदियोंकी श्रावणी इसमें–नूतन यज्ञोपवीत धारण करने का तथा स्नानविधिसमेत प्रयोग लिखाहै ... ... | ०–१२ |
| ऋग्वेद–सांख्यायन शाखाका आह्निक गुजराती भाषाटीकासमेत ... | १–८ |
| एकलिङ्गतोभद्र–रंगीन ... ... | ०–२ |
| कात्यायनीशान्ति–अर्थात् कात्यायन सूत्रानुसारी ग्रहशान्तिप्रयोग ... | ०–२ |

| नाम. | की. रु. आ. |
|---|---|
| कात्यायनीतर्पण–बडा ... | ०–२ |
| कुंडविंशतिसंग्रह– ... ... | १–४ |
| कुशकण्डिकाभाष्य–इसमें–कुण्ड और स्थण्डिलादिकी विधि,ब्रह्मास्थापन आदिविषयहैं ... ... | ०–४ |
| गयायात्रापद्धति-( गयाजीमें-श्राद्धादिक-करनेकी विधि है) ... ... | ०–४ |
| ग्रहशान्ति–( शुक्लयजुर्वेदोक्त )ग्रहयज्ञोपवीत तथा विवाहादि शुभकर्ममें-बहुत उपयोगीहै ... ... | ०–१० |

रात. ॥२३॥

| नाम | की. रु. आ. |
| --- | --- |
| गौडीयश्राद्ध प्रकाशमहानिबन्ध—इसमें श्राद्धस्वरूप, श्राद्धमें ब्राह्मणलक्षण, महालयादि निर्णय और श्राद्धप्रयोग, क्षयाहश्राद्ध, संकल्पश्राद्ध, हेमश्राद्ध, एकादशादिश्राद्ध, मासिक श्राद्ध, मघादिश्राद्ध, तथानान्दिश्राद्धादि बहुतसे श्राद्ध और विष्णवादिपूजन पितृतर्पणादिअपूर्व संग्रह हैं। चारोंवर्णोंको उपयोगीहै ... ... | ४—० |

## पुस्तक मिलनेका पता—

खेमराज श्रीकृष्णदास
"श्रीवेंकटेश्वर" स्टीम्-प्रेस
बम्बई.

गंगाविष्णु श्रीकृष्णदास.
"लक्ष्मीवेङ्कटेश्वर" प्रेस
कल्याण—बम्बई.

इस पुस्तकको खेमराज श्रीकृष्णदासने खेतवाडी ७वीं गली खम्बाटालेन स्वकीय "श्रीवेङ्कटेश्वर" स्टीम प्रेस बंबईमें अपने लिये छापकर यहीं प्रकाशित किया

॥इति वेदोक्तशिवार्चनपद्धतिःसमाप्ता॥